ग्टह्ये। तस्मात् स्वतन्त्रोऽर्थः सर्व्वपुरुषसाधारणः स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्त्तन्ते तयोः सम्बन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

## तदुपरागापेक्षित्वाच्चित्तस्यवस्तु ज्ञाताज्ञातम् ॥१७॥

अयस्कान्तमणिकल्पाविषयाः। अयः सधर्म्मकं चित्तमभि-

तथाप्यसौ जडत्वात् न ज्ञानमन्तरेण शक्यःप्रतिपत्तुं ज्ञानेन तु भासनीयःतथाच ज्ञान समयएवास्ति नान्यदा प्रमाणाभावादिति तदेतदुत्सूत्रं तावत् दूषयति भाष्यकारः तत्र वयाहारेति वस्तुखलुसर्व्वचित्त साधारणमनेकक्षणपरं परीक्ष्यमाणं परिणामात्मक मनुभूयते लौकिकपरीक्षकैः तच्चे हि ज्ञानेन सह भवेत् नूनमेवं विधमेवं चेदिमं शास्त्रीपरिक्रीयमनरोध' येन सोपि नापन्न येतेत्यर्थः मा वा भूदिदमंशस्यापन्नोज्ञान सहभूरेवास्त्वर्थः तत्राप्याह। नचैकं किं स्यात् यद्वि घटग्राहि चित्तं तद यदा पट द्रव्यव्यग्रतया न घटेवर्त्तते यद्वा विवेकविषयमासीत् तदेव च निरोधं समापद्यते तदाघटज्ञानस्य वा विवेक ज्ञानभेद मात्र जीवन स्तन्नाशान्नष्ट एव स्यादित्याह एक चित्तेति किं तत्स्यात् नस्यादित्यर्थः। संवध्यमानञ्च चित्तेन तद वस्तुविवेकीवा घटो वा कुत उत्पद्यते नियत कारणान्वय व्यतिरेकानु विधायि भावानि हि कार्य्याणि न स्वकारण मतिवर्त्य कारणान्तराद्भवितुमीशते माभूदकारणत्वे तेषां कादाचित्कत्वव्याघातः न च तत् ज्ञानकारणत्वमेव तत्कारणत्वमिति युक्तम्। आगामोदकस्य उपार्ज्जितमोदकस्य वोपयुज्यमानस्य रसवीर्य्य विपाकादि साम्य प्रसङ्गात् तस्मात् साधून्नं सम्बध्यमानं वा पुनश्चित्तेनेति अपिच योयोऽर्वाग्भागः स सर्व्वोमध्यपरभाग व्यापः ज्ञानाधीने सद्भावेस्वस्यानभूयमानत्वान्मध्यपरभागो न स्त इति व्यापकाभावादर्व्वागभागोपि न स्यात् इत्यर्थाभावात् कुतो ज्ञानसहभूरर्थ इत्याह। येचास्येति अनुपस्थिता अज्ञाताः उपसंहरति तस्मादिति सुगमं शेषं ॥ १६ ॥

सम्बध्योपरं जयन्ति येन च विषयेणोपरक्तं चित्तं स विषयोज्ञातस्ततोन्यः पुनरज्ञातोवस्तुनोज्ञाताज्ञातस्वरूपत्वात् परिणामि चित्तं यस्य तु तदेव चित्तं विषयस्तस्य ॥१७॥

**सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥**

यदि चित्तवत् प्रभुरपि पुरुषः परिणमेत ततस्तद्विषया चित्तवृत्तयः शब्दादिविषयवत् ज्ञाताज्ञाताः स्युः सदा

स्यादेतत् अर्थश्चेत् स्वतन्त्रः सच जडस्वभाव इति न कदाचित् प्रकाशेत प्रकाशन वा जडत्वमप्यस्यापगत मितिभावोऽप्यपगच्छेत् न जातु स्वभावमपहाय भावोव स्थातु मर्हति न चेन्द्रियाद्याधेयो जडस्वभावस्यार्थस्य धर्मः प्रकाश इति साम्प्रतं अथ धर्मत्वं नीलत्वादिवत् सर्व्व पुरुषसाधारण इत्येक शास्त्रार्थज्ञ इति सर्व्वे एव निद्दाम प्रसज्येरन् न जात्वःकश्चिदस्ति न चातीतानागतयोः धर्म्म प्रत्युत्पन्नयुक्त. तस्मात् स्वतन्त्रोर्थ उपलभ्य विषय इति मनोरथमात्रमेतदित्यत आह।

तदु—ज्ञातं। जडस्वभावोऽप्यर्थ इन्द्रियप्रनाडिकया चित्तमुपरञ्जयति तदेव भूतं चित्तदर्पणमुपसङ्क्रान्तप्रतिविम्बा चिति शक्तिश्चित्तमर्थोपरक्तं चेतयमानार्थमनुभवति नत्वर्थे किञ्चित् प्राकट्यमाधत्ते नाप्यसंबद्धा चित्तेन तत्प्रतिविम्बसङ्क्रान्ते रक्तत्वादिति यद्यपि च सर्व्वगतत्वाच्चित्तस्य चेन्द्रियस्य चाहङ्कारिकस्य विषये नास्ति सम्बन्धः तथापि यत्र शरीरे वृत्तिमच्चित्तं तेन सह सम्बन्धो विषयाणामित्ययस्कान्तमणिकल्पा इत्युक्तम् अयः सधर्मकं चित्तमिति। इन्द्रियप्रणालिकयाभिसंबध्या परं जयन्ति अतएव चित्तं परिणामीत्याह वस्तु न इति ॥ १७ ॥

तदेवं चित्तव्यतिरेकेणार्थमवस्थाप्य तेभ्यः परिणतिधर्मकेभ्यो व्यतिरिक्त-

ज्ञातत्वन्तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वमनुमापयति ॥ १८ ॥

स्यादाशङ्काचित्तमेव स्वाभासं विषयाभासञ्च वैशेषिकानां चित्तात्मवादिनाञ्च भविष्यत्यग्निवत्

न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥

यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि तथा मनोऽपि प्रत्येतव्यं । न चाग्निरत्र दृष्टान्तं नह्यग्निरात्मस्वरूपमप्रकाशं प्रकाशयति। प्रकाशश्चायं प्रकाश्य-

मात्मानमादर्शयितुं तद्धर्ममपरिणामित्वमस्य वक्तुं पर्यायित्वा सूत्रं पठति यस्य तु तदेव चित्त विषयस्तस्य सदाऽपरिणामीत्वात्। क्षिप्तमूढविक्षिप्तैकाग्रतावस्थितं चित्तमानिरोधात् सर्वदा पुरुषेणानुभूयते वृत्तिमत् तत् कस्य हेतोः अतः पुरुषोऽपरिणामी परिणामित्वे चित्तवत् पुरुषोऽपि ज्ञाताज्ञातविषयी भवेत्। ज्ञात विषय एव त्वयं तस्मादपरिणामी ततश्च परिणामिभ्योतिरिच्यते इति तदेतदाह।

यदि चित्तवदिति। सदाज्ञातत्वं तु मनसः संवृत्तिकस्य तस्य यः प्रभुः स्वामी-भोक्तेति यावत् तस्य प्रभो. पुरुषस्यापरिणामित्वमनुमापयति तथाचापरिणामिनस्तस्य परिणामिनश्चित्तात् पुरुषस्य भेद इति भाव.। अत्र वैनाशिकमुत्थापयति-स्यादाशङ्केति अयमर्थ. स्यादेतदेवं यदि चित्तमात्मनो विषयः स्यात् अपि तु स्वप्रकाशनं तत् विषयाभासं पूर्वचित्तं प्रतीत्य समुत्पन्न तत्कुतः पुरुषस्य सदाज्ञातविषयत्वं कुतस्तरां वाऽपरिणामितया परिणामिनश्चित्ताद्भेद इति ॥ १८ ॥

न—तत्वाब् भवेदेतदेवं यदि स्वसंवेदनं चित्तं स्यान्नत्वेतदस्तितद्धिपरिणामितया नीलादिवदनुभवव्याप्य यच्चानुभवव्याप्यं न तत्स्वाभासंभवितु मर्हति स्वात्मनिवृत्ति विरोधात् नहि तदेव क्रियाच कर्मच कारकञ्च न हि पाकः पच्यते छिदा वा छिद्यते

प्रकाशक संयोगे दृष्टः न च स्वरूपमात्रेऽस्ति संयोगः किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति। शब्दार्थः तद्यथा स्वात्मप्रतिष्ठमाकाशं इत्यप्रतिष्ठमित्यर्थः स्वबुद्धि प्रचारप्रतिसंवेदनात् सत्त्वानां प्रवृत्तिर्दृश्यते। क्रुद्धोहं भीतोहममुत्र मे रागोमुत्र मे क्रोध इत्येतत् स्वबुद्धेरग्रहणेन युक्तमिति ॥ १९ ॥

## एकसमये चोभयानवधारणम् ॥ २० ॥

न चैकस्मिन् क्षणे स्वपररूपावधारणं युक्तं चणिक-

पक्षस्वपरिणामिनानुभवकर्मेति नास्मिन् स्वयं प्रकाशता न युज्यते अपराधीन-प्रकाशता ह्यस्य स्वयं प्रकाशता नानुभवकर्मता तस्मात् दृश्यत्वात् दर्शनकर्मचित्तं न स्वाभासं आत्मप्रकाशप्रतिबिम्बितस्येव चित्तस्य तावद्वृत्तिविषयाः प्रकाशन्त इति भावः। ननु दृश्योऽपि स्वयं प्रकाशश्च न हि यथा घटादयोऽग्निना व्यज्यन्ते एवमग्निरग्न्यन्तरेणोच्यत आह। नचाग्निरत्रेति कस्मात् न हीति मानामाग्निरग्न्यन्तरात् प्रकाशिष्टविज्ञानात् तु प्रकाशत इति न स्वयं प्रकाशत इति न व्यभिचार इत्यर्थः प्रकाशा-द्यवच्छिन्नत्वि क्रियारूपः प्रकाश इति यावत् एतदुक्तं भवति या या क्रिया सा सा सर्व्वा कर्तृकरणकर्मसम्बन्धेन दृष्टा यथा पाको दृष्टश्चैवाग्नितण्डुलसम्बन्धेन तथा प्रकाशोऽपि क्रियेति तथापि तथा भवितव्यं सम्बन्धश्च भेदाश्रयी नाभेदे सम्भवति इत्यर्थः किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः। स्यादेतत् माभूत् ग्राह्यं चित्तं न हि ग्रहणस्य कारणस्य व्यापकस्य च निवृत्तौ चित्तनिवृत्ति इत्यत आह। स्वबुद्धीति बुद्धिश्चित्तं प्रचारा व्यापाराः सत्त्वा प्राणिनश्चित्तस्य वृत्तिभेदाः क्रोधलोभादयः स्वाश्रयेण चित्तेन स्वविषयेण च सह प्रत्यात्ममनुभूयमानाश्चित्तस्या-ग्राह्यतां विघटयन्तीत्यर्थः स्वबुद्धिप्रचारप्रतिसंवेदनमेव विशदयति क्रुद्धोहमिति॥१९॥

वादिनो यद् भवनं सैव क्रिया तदेव च कारकमित्यभ्युपगमः ॥ २० ॥

चित्तान्तरे दृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २१ ॥

स्यान्मतिः स्वरसनिरुद्धं चित्तं चित्तान्तरेण समनन्तरेणगृह्यत इति।

एक—रणं। स्वाभासं विषयाभासंचित्तमिति ब्रुवाणेनतावत् येनैव व्यापारेणात्मनमवधारयति तेनैव विषयमपीति वक्तुमर्हति नह्यविलक्षणो व्यापारः कार्य्यभेदाय पर्य्याप्त तस्माद्व्यापारभेदोऽङ्गीकर्त्तव्य.नच वैनाशिकानामुत्पत्तिभेदातिरिक्तः अस्ति व्यापार नचैकस्याचर्वोत्पत्त रविलक्षणायाः कार्य्यवैलक्षण्यसम्भव तस्याकस्मिकत्वप्रसङ्गात् नचैकस्योत्पत्तिद्वयसम्भवः तस्मादर्थस्य च ज्ञानरूपस्य चावधारणं नैकस्मिन् समये इति तदेतदाह्येणोच्यते नचैकस्मिन् क्षण इति तथाचोक्तं वैनाशिकैः "भूतिर्येषां क्रिया सैवकारक सैवचोच्यते" इति तस्माद्व्यवसेतच्चित्तस्य सदातनं स्वाभासत्वमुपनयत् द्रष्टारच्च द्रष्टृरपरिणामित्वञ्च दर्शयतीति सिद्ध ॥ २० ॥

पुनर्वैनाशिकमुत्थापयति। स्यान्मति माभूत दृश्यत्वेन स्वसंवेदनं एवमप्यात्मा न सिध्यति। स्वसन्तानवर्त्तिना चरमचित्तक्षणे स्वरसनिरुद्धस्वजनकचित्तक्षणग्रहणादित्यर्थ समश्च तत्ज्ञानत्वेनानन्तरञ्चाव्यवहितत्वेन समनन्तरं तेन। चि—श्च। बुद्धिरिति चित्तमित्यर्थः नागृहीता चरमाबुद्धिः पूर्व्वबुद्धिग्रहणसमर्था ह्यनवुद्धबुद्ध्यासंबद्धा पूर्व्वा बुद्धिबुद्धाभावात् सर्हति। नह्यगृहीतदण्डो दण्डिनमवगन्तुमर्हति तस्मादनवस्थेति विज्ञानवेदना संज्ञारूप संस्काराः स्कन्धाः साङ्ग-

अथ चित्तं चेच्चित्तान्तरेण गृह्येत बुद्धिः केन गृह्यते साप्यन्यया साप्यन्ययेत्यतिप्रसङ्गः स्मृतिसङ्करश्च यावन्तो बुद्धिबुद्धीनामनुभवास्तावत्यः स्मृतयः प्राप्नुवन्ति तत्सङ्कराच्चैक स्मृत्यनवधारणञ्च स्यादित्येवं बुद्धिप्रतिसम्वेदिनं पुरुषमपलपद्भिः वैनाशिकैः सर्व्वमेवाकुलीकृतं ते तु भोक्तृस्वरूपं यत्र क्वचन कल्पयतो नन्यायेन संगच्छन्ते। केचित् सत्त्वमात्रमपि परिकल्प्यास्ति स सत्त्वो य एतान् पञ्चस्कन्धान्निक्षिप्यान्यांश्च प्रतिसन्दधातीत्युक्त्वा तत एव पुनस्त्रस्यन्ति तथा स्कन्धानां महन्निर्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्य्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नुवते साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्तीति ॥ २१ ॥

योगादयः प्रवादाः साङ्ख्याश्च योगाश्च तएवादयो येषां वैशेषिकादिप्रवादानान्ते साङ्ख्ययोगादयः प्रवादाः सुगममन्यत् ॥ २१ ॥

* स्यादेतत् यदि चित्तं न स्वाभासं नापि चित्तान्तरवेद्यं आत्मनापि कथं भोज्यते चित्तं न खल्वात्मनः स्वयं प्रकाशस्याप्यस्ति काचित् क्रिया न तामन्तरेण कर्त्ता न चासम्बद्धस्य न कर्मणा तस्य भोक्ता अतिप्रसङ्गादित्याशयवान् पृच्छति कथमिति। सूत्रेणोत्तरमाह चि—नं। यत् तदनोचत् ह्यस्ति साध्यमितरत्रेति तदितः समुत्थितचित्तैः स्वबुद्धिसंवेदनं बुद्धेस्तदाकारापत्तौ चिति प्रतिविम्बाधारतया तद्रूपतापत्तौ सत्यां यथाहि चन्द्रमसः क्रियामन्तरेणापि सङ्क्रान्तचन्द्रप्रतिविम्ब ममल जलमचलं चलमिव चन्द्रमसमवभासयति एवं विनापि चिति व्यापारं उपसंक्रान्त चिति प्रतिविम्बं चित्तं स्वगतया क्रियया क्रियावती मसङ्गतामपि सङ्गतां चिति-

कथं ?—

**चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥**

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते तथाचोक्तं "न पातालं न च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम गुहा यस्यां निहितं ब्रह्मशाश्वतं बुद्धिवृत्तिमविशिष्टं कवयो वेदयन्ते इति ॥ २२ ॥

अतश्चैतदभ्युपगम्यते—

**द्रष्टृदृश्योपरक्तं चित्तं सर्व्वार्थं ॥ २३ ॥**

मनोहि मन्तव्येनार्थेनोपरक्तं तत्स्वयञ्च विषयत्वाद्विष-

शक्ति मवभासयत् भोग्यभाव मासादयत् भोक्तृभाव मापादयति तस्या इति सूत्रार्थः भाष्यमप्येतदर्थमसक्तत्तत्र तत्र व्याख्यातं इति न व्याख्यातमत्र बुद्धिवृत्त्यविशिष्टत्वे ज्ञानवृत्तेरागममुदाहरति । तथाचोक्तं न पातालमिति शाश्वतस्य शिवस्य ब्राह्मणो विशुद्ध स्वभावस्य चितिच्छायापन्नां मनोवृत्तिमेव चितिच्छायापन्नत्वाच्चित्तेरप्य विशिष्टां गुहां वेदयन्ते तस्यामेव गुहायां तद गुह्यं ब्रह्मतदपनयितुं स्वयं प्रकाश मनावरण मनुपसर्गं प्रद्योतते चरमदेहस्य भगवत इति तदेवं दृश्यत्वेन चित्तस्य परिणामिन स्तदतिरिक्तः पुमान् परिणति धर्म्मोपपादितः । संप्रति लोकप्रत्यक्षमप्यत्र

यिणा पुरुषेणात्मीयया वृत्त्याभिसम्बन्धं तदेतच्चित्तमेव द्रष्टृ-दृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्व्वार्थमित्युच्यते। तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः अपरे चित्तमात्रमेवेदं सर्व्वं नास्ति। खल्वयं गवादि घटादिश्च सकारणो लोक इति अनुकम्पनीयास्ते कस्मात् अस्ति हि तेषां भ्रान्तिवीजं सर्व्वरूपाकारनिर्भासं चित्तमिति समाधिप्रज्ञायां प्रज्ञे-

प्रमीयमपयति। अतस्तेतदिति अवश्य चेतदित्यर्थ। द्रष्टृ—र्थं। यथाहिर्नीलाद्यनुरक्तं चित्तं नीलाद्यर्थं प्रत्यक्षत्वेनावस्थापयति एवं द्रष्टृच्छायापत्त्यातदनुरक्तचित्तं द्रष्टारमपि प्रत्यक्षतयावस्थापयति अस्ति हि द्याकार ज्ञानं नीलमहं सम्प्रत्येमि इति तस्मात् र्थं यवत् यथापि प्रत्यक्षसिद्धोपि न विविच्यावस्थापितो यथा जले चन्द्रमसो विम्बं नत्वे तावता तदप्रत्यक्षं न चास्य जलगतत्वं तट प्रमाणमिति चन्द्ररूपस्य प्रमाणभवितु मर्हति तस्माच्चित्ते प्रतिविम्बित तयाचैतन्यगोचरापि चित्तवृत्तिर्न चैतन्यागोचरेति तदिदं सर्व्वार्थत्वं चित्तस्येति तदेतदाह मनोहीति न केवल तदाकारापत्त्या मन्तव्यं मार्थेनोपरक्तं मनः अपितु स्वयं चेतिचकारो भिन्नक्रमः पुरुषेणेत्यस्य नन्तर द्रष्टव्यः तच्छायापत्तिः पुरुषस्य वृत्तिः इयञ्च चैतन्यच्छायापत्तिश्चित्तस्य वैनाशिकैः रभ्युपेतव्या कथमन्यथाचित्ते चैतन्यमिते मारोपयाम्बभूवु रित्याह तदनेनेति केचिद्वै-नाशिका बाह्यार्थवादिनः। अपरे विज्ञानमात्रवादिनः। ननु यदि चित्तमेव द्रष्टाकारं दृश्याकारं चानुभूयते हन्त चित्तादभिन्नावेवास्तां द्रष्टृदृश्यौ यथाहुः। 'अभिन्नोपि हि बुद्ध्यात्मा विपर्य्यासित दर्शनै 'र्ग्राह्यग्राहक संवित्ति भेदवानिवलक्ष्यते'

योर्थः प्रतिबिम्बीभूतस्तस्यालम्बनीभूतत्वादन्यः सचेदर्थ श्चित्तमात्रं स्यात् कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत तस्मात् प्रतिबिम्बीभूतोर्थः प्रज्ञायां येनावधार्य्यते सपुरुष इति एवं गृहीतृग्रहणग्राह्यस्वरूपचित्तभेदात्त्रयमप्येतज्जातितः प्रविभजन्ते ते सम्यग्दर्शिनस्तैरधिगतपुरुषः ॥२३॥

इतश्चैतत्—

## तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्य-कारित्वात् ॥ २४ ॥

तदेतच्चित्तमसंख्येयाभिर्व्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं न स्वार्थं संहत्यकारित्वाद्गृह-

इति तत्कथमेतेऽनुकम्पनीया इत्यत आह । समाधिप्रज्ञायामिति ते खलूक्ताभि-रुपपत्तिभिश्चित्तातिरिक्तं पुरुषमभ्युपगमय्याप्याष्टाङ्गयोगोपदेशेन समाधिप्रज्ञाया मात्मगोचरायामवतार्य्य बोधयितव्याः । तदयुथा समाधिप्रज्ञायां प्रज्ञे योर्थः आत्मा प्रतिबिम्बीभूतोन्यः कस्मात् तस्यात्मनः आलम्बनीभूतत्वात् अथ चित्तादभिन्नमेव कस्मान्नालम्बनं भवतीति यदि युक्तिबोधितोपि वैजात्याद्वदेत् तत्रहेतुमाह सचेदात्म-रूपोर्थः चित्तमात्रं स्यात् नतु ततो व्यतिरिक्तः ततः कथं प्रज्ञयैव प्रज्ञारूपमवधा-र्य्येत स्वात्म निर्वृत्ति विरोधात् उपसंहरति । तस्मादिति समीचीनोपदेशेनानु-कम्पिता भवन्तीति आह एवमेतदिति जातितः स्वभावः इत्यर्थः चित्तातिरिक्तात्म सद्भावे हेत्वन्तरमवतारयति इतश्चेति ॥ २२ ॥ २३ ॥

तद—त्वात् । यद्यप्यसंख्येयाः कर्मवासनाः क्लेशवासनाश्च चित्तमेवाधिशेरते न तु पुरुषं तथाच वासनाधर्मोविपाकाश्चित्तमाश्रयतया चित्रीभूता

वत् संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यं न सुख-चित्तं सुखार्थं न ज्ञानं ज्ञानार्थमुभयमप्येतत् परार्थं यश्च भोगेनापवर्गेण चार्थेनार्थवान् पुरुषः स एव परो न परः सामान्यमात्रं यत्तु किञ्चित्परं सामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकस्तत् सर्व्वं संहत्यकारित्वात् परार्थमेव स्यात् यस्त्वसौ परोविशेषः स न संहत्यकारी पुरुष इति ॥ २४ ॥

मावहन्ति। भोक्तुरर्थं च भोग्यमिति सर्व्वं चित्तार्थं प्राप्तं तथापि तच्चित्तमसङ्ख्येय वासना विचित्रमपि परार्थं कस्मात् संहत्यकारित्वादितिसूत्रार्थः। व्याचष्टे तदेतदिति स्यादेतच्चित्तं संहत्यापि करिष्यति स्वार्थञ्च भविष्यति कः खलु विरोध इति यदि कश्चित् ब्रूयात् त प्रत्याह। संहत्यकारिणेति सुखचित्तमिति भोगमुपलक्ष-यति तेन दुःख चित्तमपि द्रष्टव्यं ज्ञानमित्यपवर्ग उक्त एतदुक्तं भवति सुखदुःख-चित्ते प्रतिकूलानुकूलात्मकेनात्मनि सम्भवतः स्वात्मनि वृत्तिविरोधात् न चान्योऽपि संहत्यकारी साक्षात् परम्परया वा सुखदुःखे विदधानस्ताभ्यामनुकूलनीयः प्रतिकूल-नीयो वा तस्मादयं साक्षात् परम्परया वा न सुखदुःखयोर्व्याप्रियते स एवास्यमनु-कूलनीयः प्रतिकूलनीयो वा स च नित्योदासीनः पुरुषः एवमपवृज्यते येन ज्ञाने-न तस्यापि धर्मत्वात् स्वात्मनि च वृत्तिविरोधान्न ज्ञानार्थत्वं न चान्यविषयाद्-ज्ञानादपवर्ग सम्भवो विदेहप्रकृतिलयानामपवर्गासम्भवात् तस्मात्तत् ज्ञानमपि पुरुषार्थ-मेव न तत् स्वार्थं संहतपरार्थत्वे चानवस्था प्रसङ्गादसंहत परार्थ सिद्धिरिति तदेवं कैवल्यमूलबीजं सम्यगात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनधिकृत पुरुषान्तराद्व्यावर्त्तयितुमाह। विशेष निवृत्तिः यस्यात्मभावे भाव नास्ति तस्याष्टाङ्ग योगोपदेशादनुतिष्ठतो युञ्जानस्य तत्परिपाकात् चित्तसत्त्वपुरुषयो विंशेष दर्शना दात्मभावना निवर्त्तते यस्यात्मभावभावनैव नास्ति नास्तिकस्य तस्योपदेशानधि

विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥२५॥

यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्त्तितमित्यनुमीयते तस्यात्मभावभावना स्वाभाविकी प्रवर्त्तते यस्याभावादिदमुक्तं स्वभावं मुक्त्वा दोषाद् येषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति। तत्रात्मभावभावना कोऽहमासं कथमहमासं किंस्विदिदं कथंस्विदिदं के भविष्यामः कथं भविष्याम इति सा तु विशेषदर्शिनो निवर्त्तते कुतः चित्तस्यैवैष विचित्रः परिणामः पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति ततोऽप्यात्मभावभावनाकुशलस्य निवर्त्तत इति॥ २५॥

कृतस्यापरिनिश्चितात्म तत्परलोकभावस्य नोपदेशो न विशेषदर्शनं नात्मभावभावना निवृत्तिरिति सूत्रार्थः॥ २४॥

नन्वात्मभावभावनायाः चित्तवर्त्तिन्याः कुतोऽवगम इत्यत आह। यथा प्रावृषीति प्राग्भवीयं तत्त्वदर्शनबीजमपवर्गभागीयं यत्कर्माष्टाङ्गयोगानुष्ठानं तदेकदेशानुष्ठानं वा तदभिनिर्वर्त्तितमस्तीत्यनुमीयते तस्यचात्मभावभावनावश्यमेव स्वाभाविकी वस्त्वभ्यासं विनापि प्रवर्त्तते अनधिकारिणमागमिनो वचनेन दर्शयति यस्याभावादिदमिति पूर्वपक्षःनास्तिकर्मफलं परलोकिनोभावात् परलोकाभाव इति तत्र रुचिररुचिश्च निर्णये पञ्चविंशति तत्त्व विषये आत्मभावभावना प्राग्व्याख्याता विशेषदर्शिनः परामर्शमाह। चित्तस्यैवेति तस्य विशेषदर्शनकुशलस्यात्मभावना विनिवर्त्तते इति॥ २५॥

**तदाविवेकनिम्नं कैवल्यप्राग्भावं चित्तम्॥२६॥**

तदानीं यदस्य चित्तं विषय प्राग्भावमज्ञाननिम्नमासीत्तदस्यान्यथा भवति कैवल्यप्राग्भवं विवेकजज्ञाननिम्नमिति ॥ २६ ॥

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥२७॥**

प्रत्ययविवेकनिम्नस्यसत्वपुरुषान्यताख्यातिमात्रप्रवाहिनश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराण्यस्मीति वा ममेति वा जानामीति वा न जानामीति वा कुतः क्षीयमाणबीजेभ्यः पूर्व्वसंस्कारेभ्यः इति ॥ २७ ॥

**हानमेषां क्लेशवदुक्तम् ॥ २८ ॥**

यथा क्लेशा दग्धबीजभावना प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना दग्धबीजभावः पूर्व्वसंस्कारो न प्रत्ययप्रसूर्भवति

अथ विशेष दर्शिनः कीदृशं चित्तमित्यत आह। तदा—चित्तं। निगदव्याख्यातं ॥ २६ ॥ स्यादेतद्विशेष दर्शनं चेद्विवेक निष्ठं न जातु चित्तं व्युत्थितं स्याद्दृश्यते चास्यभिक्षामटतो व्युत्थित मित्यत आह। त—भ्यः। प्रत्ययेति प्रतीयते येनस प्रत्ययश्चित्त सत्वं तस्माद्विवेकश्चितेः। तेन निम्नस्य जानामीति साक्षात् मीक्षी विविच्य दर्शितो न जानामीति मोहसम्मूलावहङ्कार ममकारावह मस्मीति वा ममेति दर्शितो क्षीयमाणानि च तानि बीजानि चेति समासः पूर्व्व संस्कारेभ्यो: व्युत्थान संस्कारेभ्यः। २७ ॥

स्यादेतत् सत्यपि विवेकज्ञाने व्युत्थान संस्कारा यदि प्रत्ययान्तराणि

ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यते ॥ २८ ॥

**प्रसङ्ख्यानेप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्ममेघः समाधिः ॥ २९ ॥**

यदायं ब्राह्मणः प्रसङ्ख्यानेप्यकुसीदस्ततोपि न किञ्चित् प्रार्थयते तत्रापि विरक्तस्य सर्व्वथा विवेकख्यातिरेव भवतीति संस्कारवीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्म्ममेघोनाम समाधिर्भवति ॥ २९ ॥

प्रसुवते कस्तर्हि हानहेतवे तेषां यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह। हान–क्तं। अपरिपक्व विवेकज्ञानस्याक्षीयमाणा व्युत्थान संस्कारा प्रत्ययान्तरं प्रसुवते न तु परिपक्व विवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति यथा विवेकच्छिद्र समुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते तत्कस्य हेतोःतदेते क्लेशा विवेकज्ञान वह्निदग्धवीजभावा इति एवं व्युत्थान संस्कारा अपीति अव्युत्थान संस्कारा विवेकज्ञान संस्कारै निरोद्धव्याः विवेक सस्काराश्च निरोधसंस्कारैः निरोध संस्काराणान्त्व वाह्यविषयत्वं दर्शितं निरोध उपायः प्रायश्चित्तनीय इत्यत आह। ज्ञानसंस्कारा स्थिति पररैवाग्य संस्कारा इत्यर्थः ॥ २८ ॥

तदेवं सूत्रकारो व्युत्थान निरोधोपायं प्रसङ्ख्यानमुक्त्वा प्रसङ्ख्यान निरोधोपाय माह। प्र–समाधिः ततःप्रसङ्ख्यानान्नकिञ्चित् सर्व्वभावाधिष्ठातृत्वादि,प्रार्थयते प्रत्युत तत्रापि क्लिश्नाति परिणामित्वदोषदर्शनेन विरक्तः सर्व्वथा विवेकख्यातिरेव भवति एतदेव विवृणोति तत्रापीति यदाव्युत्थान प्रत्यया भवेयुः तदा नायं ब्राह्मणः सर्व्वथा विवेकख्यातिः यतस्तस्य न प्रत्ययान्तराणि भवन्ति ततः सर्व्वथा विवेकख्याति

ततः क्लेशकर्म्मनिवृत्तिः॥ ३०॥

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति कुशलाकुशलाश्च कर्म्माशयाः समूलघातं हता भवन्ति क्लेश-कर्म्मनिवृत्तौ जीवन्नेव विद्वान विमुक्तो भवति कस्मात् यस्माद्विपर्य्ययो भवत्यकारणं न हि क्षीणविपर्य्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यते इति॥ ३०॥

तदा सर्व्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम्॥ ३१॥

सर्व्वैः क्लेशकर्म्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति तमसाभिभूतमावृतं ज्ञानसत्वं क्वचिदेव रजसा प्रवर्त्तितं उद्घाटितं ग्रहणसमर्थं भवति तत्र यदा सर्वैरावरणमलै-रपगतमलं भवति तदा भवत्यस्यानन्त्यं ज्ञानस्यानन्त्या-

रिति तदास्य धर्म्ममेघः समाधिर्भवति। एतदुक्तं भवति प्रसङ्ख्याने विरक्तः सन्निरोध। मिच्छन् धर्म्ममेघं समाधिमुपासीत तदुपासनेन च सर्व्वथा विवेकख्यातिर्भवति॥२९॥

सन्निरोधं पारयतीति तस्य च प्रयोजनमाह। ततः। कस्मात् पुनर्जीवन्नेव विद्वान् विमुक्तोभवति उत्तरं यस्माविति क्लेशकर्म्म वासनेदः क्लिष्टकर्म्माशयौ जात्यादि निदानं न वासति निदाने निदानीभवितुमर्हति यथाहाव भगवानक्षपादः "वीतराग जन्मादर्शनादिति"॥ ३०॥

अथैवं धर्म्ममेघे सति कीदृशं चित्तमित्यत आह। तदासर्व्वा—त्यं। आव्रियते चित्तसत्वमेभिरिति आवरणानि मलाः क्लेशकर्म्माणि सर्व्वे च ते आवरण मलाश्चेति

ज्ञेयमल्पं सम्पद्यते यथाकाशे खद्योतः यत्रेदमुक्तं 'अन्धोमणि मविध्यत्तमनङ्गुलिरावयत् अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोभ्य पूजय' दिति ॥ ३१ ॥

## ततः कृतार्थानां परिणामक्रमसमाप्तिर्गु-णानाम् ॥ ३२ ॥

तस्य धर्म्ममेघस्योदयात् कृतार्थानां गुणानां परिणाम-क्रमः परिसमाप्यते नहि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातु मुत्सहन्ते ॥ ३२ ॥

सर्व्वावरणमलाः तेभ्योपेतस्य चित्तसत्वस्य ज्ञानस्य ज्ञायते नेनेति अनया व्युत्पत्त्या आनन्त्यादपरिमेयत्वात् ज्ञेयमल्पम्। यथा हि शरदि घनपटल मुक्तस्य चन्द्रार्च्चिषः परितः प्रद्योतमानस्य प्रकाशानन्त्यात् प्रकाश्याः घटादयोल्पाः प्रकाशन्ते एवमपगत रजस्तमसश्चित्तसत्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति तदेतदाह। सर्व्वेति एतदेव व्यतिरेकमुखेन स्फोरयति आवरकेण तमसाभिभूत मिति क्रियाशीलेन रजसा प्रवर्त्तित मतएवोद्घाटितं प्रदेशादपनीतं वमइत्यर्थः अत-एव सर्व्वान् धर्म्मान् ज्ञेयान् मेहति वर्षति प्रकाशनेनेति धर्म्ममेघ इत्युच्यते नन्वयमस्तु धर्म्ममेघः समाधि सवासन क्लेशकर्म्माशय प्रशमहेतुः अथ सत्यप्यस्मिन् कस्मात् न जायते पुनर्जन्तुः इत्यत आह। यत्रेदमुक्तमिति कारणसमुच्छेदीपिचेत् कार्य्य-क्रियते हन्त भोः मणिवेधादयोन्धादिभ्यो भवेयुः प्रत्ययाः तथाचानुपपन्नार्थतायाः माभाणको लौकिकउपपन्नार्थः स्यात् अविध्यदन्धोमणिमिति आवयत् ग्रथितवान् प्रत्यमुञ्चत पिनद्धवान् अभ्यपूजयत् स्तुतवानिति ॥ ३१ ॥

ननु धर्म्ममेघस्य परा काष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघात मपहन्तु व्युत्थान समाधिः संस्कारान् स क्लेशकर्म्माशयान् गुणाकु स्ततएव विकार

अथ कोऽयं क्रमोनामेति—

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः॥३३**

क्षणानन्तर्य्यात्मा परिणामस्यापरान्तेनावसानेन गृह्यते क्रमः नह्यननुभूतक्रमक्षणा पुराणता वस्त्रस्यान्ते भवति नित्येषु च क्रमोदृष्टः द्वयी चेयं नित्यता कूटस्थ नित्यता परिणामनित्यताच तत्र कूटस्थ नित्यता पुरुषस्य परिणामनित्यता गुणानां यस्मिन् परिणम्यमाने तत्वं

करणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादिन्नारभन्त इत्यत आह। ततो—गुणानां। शीलमिदं गुणानां यदमीयं प्रतिक्रियार्थोस्तं प्रति न प्रवर्त्तन्ते इति भावः॥११॥

अवान्तरे परिणामक्रमं पृच्छति। अथ कोऽयमिति क्षण—क्रमः। परिणाम क्षण-प्रति योगीक्षणः प्रतिसम्बन्धी यस्य स तथोक्तः क्षण प्रचयाश्रय इत्यर्थः न जातु क्रमः क्रमवन्तमन्तरेण शक्योनिरूपयितुं नचैकस्यैव क्षणस्य क्रमः तस्मात् क्षणप्रचयाश्रयः परिशिष्यते तदिदमाह क्षणानन्तर्य्येति। परिणामक्रमे प्रमाणमाह परिणामस्येति नवस्यहि वस्त्रस्य प्रयत्न संरक्षितस्यापि चिरेण पुराणता दृश्यते सोयं परिणाम स्यापरान्तः पर्य्यवसानं तेन हि परिणामस्य क्रमः ततः प्रागपि पुराणतायाः सूक्ष्मा सूक्ष्मतर सूक्ष्मतम स्थूल स्थूलतर स्थूलतमत्वादीनां पौर्वापर्य्यमनुमीयते एतदेव व्यति-रेक मुखेन दर्शयति नहीति अननुभूतोऽप्राप्तः क्रमक्षणो यया सा तथोक्ता नन्वेष क्रम प्रधानस्य न सम्भवति तस्य नित्यत्वादित्यत आह। नित्येषु चेति बहुवचनेन सर्व्वनित्यव्यापितां क्रमस्य प्रतिजानीते तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्य-व्यापितां क्रमस्य उपपादयति। द्वयीति ननु कूटस्थं स्वभावादप्रच्युतमस्तु नित्यं यदि परिणामि स्वेव स्वरूपात् च्यवमानं कथं नित्यमित्यत आह। यस्मिन्निति

न विहन्यते तन्नित्यं उभयस्य च तत्वानभिघातान्नित्यत्वं तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमोलब्धपर्य्यवसानो नित्येषु धर्म्मिषु गुणेष्वलब्धपर्य्यवसानः कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्य्यवसानः शब्दपृष्ठेनास्ति क्रियामुपादाय कल्पित इति अथास्य संसारस्य स्थित्या गत्याच गुणेषु वर्त्तमानस्यास्ति क्रमसमाप्तिर्न्नवेति अवचनीयमेतत् कथं अस्ति प्रश्न एकान्तवचनीयः

धर्म्मलक्षणावस्थानामुदयव्ययधर्म्मत्वं धर्म्मिणस्तु तत्वादविघात एवेति अथ किं परिणामापरान्तनिर्ग्राह्यता सर्व्वक्रमस्य नेत्याह तत्र गुणधर्म्मेषु बुद्ध्यादिष्विति यतो लब्धपर्य्यवसानः धर्म्माणां विनाशात् प्रधानस्य तु परिणामक्रमोनलब्धपर्य्यवसानः। ननु प्रधानस्य धर्म्मरूपेण परिणामादस्तु परिणामक्रमः। पुरुषस्यत्वपरिणामिनः कुतः परिणामक्रम इत्यतआह कूटस्थेति तत्र बद्धानां चित्ताव्यतिरेकाभिमानात् तत्परिणामेनपरिणामाध्यासःमुक्तानाञ्चास्तिक्रियामुपादायावास्तवोपिपरिणामक्रमोहकल्पितः शब्दस्य पुरःसरतया तत् पृष्ठोविकल्पोऽस्ति क्रियामुपादत्त इति गुणेष्वलब्धपर्य्यवसानः परिणामक्रमइत्युक्तम् तदसहमानः पृच्छति अथेति। स्थित्येति महाप्रलयावस्थायां गत्येति सृष्टौ एतदुक्तम्भवति यद्यानन्त्यान्नपरिणामसमाप्तिः संसारस्य इत्तभीः कथं महाप्रलयसमये सर्व्वेषामात्मनां सह संसारसमुच्छेदे त कथञ्च सृष्टादौ सहसोत्पद्येत संसारः तस्मादेकैकस्यात्मनोमुक्तिक्रमेण सर्व्वेषां विमोक्षादुच्छेदः सर्व्वेषां संसारस्य क्रमेणेति प्रधान परिणाम क्रम परिसमाप्तिः एवञ्च प्रधानस्याप्यनित्यत्व प्रसङ्गः न चापूर्व्वसत्व प्रादुर्भाव इष्यते येनानन्त्यं स्यात् तदसत्यनादित्वव्याहतेः सकलशास्त्रार्थ भङ्गप्रसङ्ग इतिभावः। उत्तरमाह अवचनीयंमनुत्तरार्हमेतत् एकान्ततएव तस्यावचनीयतां दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति।

सर्व्वोजातो मरिष्यति ओ भो इति अथ सर्व्वो मृत्वा जनिष्यत इति विभज्य वचनीयमेतत् प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यते इतरस्तु जनिष्यते। तथा मनुष्यजातिः श्रेयसी न वाश्रेयस्यो वे परिपृष्टे विभज्य वचनीयः प्रश्नः पशूनधिकृत्य श्रेयसी देवानृषींश्चाधिकृत्य नेति अयन्त्ववचनीयः प्रश्नः संसारोयमन्तवानथानन्त इति कुशलस्यास्ति संसारक्रमपरिसमाप्तिर्नेतरस्येति अन्यतरावधारणे दोषः तस्माद्व्याकरणीयएवायं प्रश्न इति ॥३३॥

अस्ति प्रश्न इति सर्व्वोजातो मरिष्यति प्रश्नोत्तरं ओं भो. इति स प्रश्न एकान्तः. अविभज्य वचनीयमुक्ता प्रविभज्यवचनीयं प्रश्नमाह। अथ सर्व्व इति विभज्य वचनीयतामाह विभज्येति विभज्य वचनीयम। प्रश्नान्तरं निदर्शयन्नाह तथा मनुष्यं ति अयन्त्ववचनीय एकान्ततः न हि सामान्येन कुशलाकुशल पुरुष संसार स्यान्तवत्त्वमनन्तवत्त्वं वा शक्यमेकान्ततो वक्तुं यथा प्राणभृन्मात्रस्य श्रेयस्त्वाश्रेयस्त्वं वानैकान्ततः शक्यमवधारयितुं यथा जातमात्रस्य मरणमेकान्ततो विभज्य पुनः शक्यावधारणमित्याह। कुशलेति अयमभिसन्धिःक्रमेण मोक्षे सर्व्वेषां मोक्षात् संसारोच्छेद इत्यनुमानं तच्चागमनुसिद्ध मोक्षाश्रयं तथाचाभ्युपगत मोक्ष प्रतिपादकागम प्रमाणभावः कथं तमेवागमं प्रधान विकार नित्यतायामप्रमाणी कुर्यात् तस्मादागमबाधित विषयमेतदनुमानं न प्रमाणं श्रूयते हि श्रुति स्मृति इतिहास पुराणेषु सर्गप्रतिसर्ग परम्पराया अनादित्वमनन्तत्वं चेति अपिच सर्व्वात्मना संसारस्य न तावद् युगपदुच्छेदः सम्भवी न हि पण्डितरूपानामप्यनेक जन्मपरम्पराभ्यास परिश्रमसाध्या विवेकख्याति प्रतिष्ठा किं पुन. प्राणभृन्मात्रस्य स्थावर जङ्गमादेरेकदाऽकस्मात् भवितुमर्हति न च कारणायौगपद्ये कार्य्ययौगपद्यं युज्यते

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तं तत्स्वरूपमवधार्य्यति—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति॥ ३४॥**

कृतः भोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्य्यकारणात्मनां गुणानां तत् कैवल्यंस्वरूपप्रतिष्ठा पुनर्बुद्धिसत्वानभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव केवला तस्याः सदा तथैवावस्थानं कैवल्यमिति॥ ३४॥

क्रमेण तु विवेकख्यातावसंख्येयानां क्रमेण मुक्तौ न सर्वोच्छेदः अनन्तत्वाज्जन्तुनामसद्भावात् इति सर्व्वमवदातम्। ३३।

कैवल्यरूपावधारणपरस्य सूत्रस्यावान्तरसङ्गतिमाह गुणाधिकारेति पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्य स्वरूप प्रतिष्ठा वा चिति शक्तिरिति। कृतः करणीयतया पुरुषार्थशून्याना यः प्रतिप्रसवः स्वकारणे प्रधाने लयः तेषां कार्य्यकारणात्मना गुणानां व्युत्थान समाधिनिरोध संस्कारा मनसि लीयन्ते मनोऽस्मितायां अस्मिता लिङ्गे लिङ्गमलिङ्गे इति योयं गुणानां कार्य्यकारणात्मकानां प्रतिसर्गः तत्कैवल्यं यं कञ्चित् पुरुषं प्रति प्रधानस्य मोक्षः स्वरूप प्रतिष्ठा पुरुषस्य च मोक्ष इत्याह। स्वरूपेति। अस्ति हि महाप्रलयेपि स्वरूप प्रतिष्ठा चितिशक्तिर्न चासौ मोक्ष इत्यत आह। पुनरिति सोऽयं इतिशब्दः शास्त्रपरिसमाप्तौ॥ ३४॥

इति श्रीपातञ्जले योगशास्त्रे साङ्ख्यप्रवचने कैवल्यपाद श्चतुर्थः सम्पूर्णः॥

॥ ग्रन्थश्चायं समाप्तः॥

मुक्त्यर्हं चित्तं परलोकमेयं च सिद्धयो धर्म्ममेघः समाधिः।

द्वयी च मुक्तिः प्रतिपादितास्मिन् पादे प्रसङ्गादपि चान्यदुक्तम्॥

निदानं तापानामुदितमथ तापाश्च कथिताः

सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि।

कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरो

विविक्तं कैवल्यं परिगणिततापा चितिरसौ॥ ४॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां कैवल्य-

पादश्चतुर्थः समाप्तः॥

॥ ग्रन्थश्चायं समाप्तः॥

# पातञ्जलदर्शनम् ।

श्रीभोजदेवकृतवृत्तिसमेतम् ।

वि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च ।

कलिकातानगरे

सारसुधानिधियन्त्रे

नं ६५ वाइकस् लेन ।

मुद्रितम् ।

इं १८८० ।

प्रिण्टर—श्रीसदानन्द मिश्र,

# पातञ्जलदर्शनम् ।

## भोजदेवकृतवृत्तिसमेतम् ।

—००—

देहार्द्धयोगः शिवयोः सः श्रेयांसि तनोतु वः ।
दुष्प्रापमपि यत् स्मृत्या जनः कैवल्यमश्नुते ॥ १ ॥
त्रिविधान्यपि दुःखानि यदनुस्मरणान्नृणाम् ।
प्रयान्ति सद्यो विलयं तं नुमः शिवमव्ययम् ॥ २ ॥
पतञ्जलिमुनेरुक्तिः काप्यपूर्व्वा जयत्यसौ ।
पुंप्रकृत्योर्वियोगोऽपि योग इत्युदितो यया ॥ ३ ॥

जयन्ति वाचः फणिभर्त्तुरान्तर
स्फुरत्तमस्तोमनिशाकरत्विषः ।
विभाव्यमानाः सततं मनांसि याः
सतां सदानन्दमयानि कुर्व्वते ॥ ४ ॥

शब्दानामनुशासनं विदधता पातञ्जले कुर्व्वता
वृत्तिं राजमृगाङ्क संज्ञकमपि व्यातन्वता वैद्यके ।
वाक्चेतो वपुषां मलः फणिभृतां भर्त्त्रेव येनोद्धृत-
स्तस्य श्रीरणरङ्गमल्ल नृपतेर्व्वाचो जयन्त्युज्ज्वलाः ॥ ५ ॥
दुर्ब्बोधं यदतीव तद्धि जहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वति विस्तृतिं विदधति व्यर्थैः समासादिकैः

## तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥

द्रष्टुः पुरुषस्य तस्मिन् काले स्वरूपे चिन्मात्रतायामवस्थानं स्थितिर्भवति। अयमर्थ उत्पन्नविवेकख्याते चित्संक्रमाभावात् कर्तृत्वाभिमाननिवृत्तौ प्रोच्छन्नपरिणामायां बुद्धौ च आत्मनः स्वरूपेणावस्थानं स्थितिर्भवति ॥ ३ ॥

व्युत्थानदशायान्तु तस्य किं रूपम्? इत्याह।

## वृत्तिसारूप्यमितरत्र ॥ ४ ॥

इतरत्र योगादन्यस्मिन् काले वृत्तयो या वक्ष्यमाणलक्षणास्ताभिः सारूप्यं तद्रूपत्वम्। अयमर्थः। यादृश्यो वृत्तयो दुःखमोहसुखाद्यात्मिकाः प्रादुर्भवन्ति तादृग्रूप एव संवेद्यते व्यवहर्तृभिः पुरुषः। तदेवं यस्मिन्नेकाग्रतया परिणते चितिशक्तेः स्वस्मिन् स्वरूपे प्रतिष्ठानं भवति यस्मिंश्चेन्द्रियवृत्तिद्वारेण विषयाकारेण परिणते पुरुषस्तद्रूपाकार एव परिभाव्यते यथा जलतरङ्गेषु चलत्सु चन्द्रश्चलन्निव प्रतिभासते तच्चित्तम् ॥ ४ ॥ वृत्तिपदं व्याख्यातुमाह।

## वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः ॥५॥

वृत्तयश्चित्तपरिणामविशेषाः वृत्तिसमुदायलक्षणस्य अवयविनो या अवयवभूता वृत्तय स्तदपेक्षया तयप्रत्ययः। एतदुक्तं भवति। पञ्चवृत्तयः कीदृश्यः? क्लिष्टाः क्लेशैर्वक्ष्यमाणलक्षणैराक्रान्ताः क्लिष्टाः। तद्विपरीता अक्लिष्टाः ॥ ५ ॥

एता एव पञ्चवृत्तयः संक्षिप्य उद्दिश्यन्ते।

## प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥

तासां क्रमेण लक्षणमाह।

## प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

अत्र अतिप्रसिद्धत्वात् प्रमाणानां शास्त्रकारेणभेदलक्षणे-नैव गतत्वात् लक्षणस्य पृथक् लक्षणं न कृतम् । प्रमाणलक्षणन्तु अविसंवादिज्ञानं प्रमाणमिति । इन्द्रियद्वारेण वाह्यवस्तूपरागाच्चित्तस्य तद्विषयसामान्यविशेषात्मनोऽर्थस्य विशेषावधारणे प्रधानावृत्तिः प्रत्यक्षम् । गृहीतसम्बन्धात् लिङ्गात् लिङ्गिनि सामान्याध्यवसायोऽनुमानम् । आप्तवचनं आगमः ॥ ७ ॥ एवं प्रमाणरूपां वृत्तिं व्याख्याय विपर्य्ययरूपमाह ।

## विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥८॥

अतथाभूतेऽर्थे तथोत्पद्यमानं ज्ञानं विपर्य्ययः । यथा शुक्तिकायां रजतज्ञानम् । अतद्रूपप्रतिष्ठमिति । तस्यार्थस्य यद्रूपं तस्मिन् रूपे न प्रतिष्ठति तस्यार्थस्य यत् पारमार्थिकं रूपं न तत् प्रतिभासयतीति यावत् संशयोऽप्यतद्रूपप्रति ष्ठितत्वान्मिथ्याज्ञानं यथास्थाणुर्व्वा पुरुषो वा ? इति ॥ ८ ॥ विकल्पवृत्तिं व्याख्यातुमाह ।

## शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥

शब्दजनितं ज्ञानं शब्दज्ञानं तदनुपतितुं शीलं यस्य सः शब्दज्ञानानुपाती । वस्तुनस्तथात्वमनपेक्षमाणोऽध्यवसायः स विकल्प इत्युच्यते । यथा पुरुषस्य चैतन्यं स्वरूपमिति । अत्र देवदत्तस्य कम्बल इति शब्दजनिते ज्ञाने षष्ठ्या योऽध्यवसितो भेदस्तमिहाविद्यमानमपि समारोप्य प्रवर्त्ततेऽध्यवसायः । वस्तुतस्तु चैतन्यमेव पुरुषः ॥९॥ निद्रां व्याख्यातुमाह ।

## अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

अभावप्रत्यय आलम्बनं यस्याः सा तथोक्ता एतदुक्तं भवति। या सन्ततं उद्रिक्तत्वात्तमसः समस्तविषयपरित्यागेन प्रवर्त्तते वृत्तिः सा निद्रा। तस्याश्च सुखमहमस्वाप्समिति स्मृतिदर्शनात् स्मृतेश्चानुभवव्यतिरेकेणानुपपत्तेर्वृत्तित्वम् ॥ ११ ॥ स्मृतिं व्याख्यातुमाह।

## अनुभूतविषया संप्रमोषः स्मृतिः ॥१२॥

प्रमाणेनानुभूतस्य विषयस्य योऽयमसंप्रमोषः संस्कारद्वारेण बुद्धावारोहः सा स्मृतिः। तत्र प्रमाणविपर्य्ययविकल्पोजाग्रदवस्थातएव तदनुभवबलात् प्रत्यक्षीयमाणाः स्वप्नाः। निद्रा तु असंवेद्यमानविषया। स्मृतिश्च प्रमाणविकल्पनिद्रानिमित्ता ॥१२॥ एवं वृत्तीर्व्याख्याय सोपायं निरोधं व्याख्यातुमाह।

## अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १३ ॥

अभ्यासवैराग्ये वक्ष्यमाणलक्षणे ताभ्यां प्रकाशप्रवृत्तिनियमरूपायावृत्तयस्तासां निरोधो भवतीत्युक्तं भवति तासां विनिवृत्त बाह्याभिनिवेशानां अन्तर्मुखतया स्वकारण एव चित्ते शक्तिरूपतयाऽवस्थानम्। तत्र विषयदोषदर्शनजेन वैराग्येण तद्वैमुख्यमुत्पाद्यते। अभ्यासेन च सुखजनकं शान्तप्रवाहप्रदर्शनद्वारेण दृढ़स्थैर्य्यमुत्पद्यते। इत्थं ताभ्यां भवति चित्तवृत्तिनिरोधः ॥ १३ ॥ अभ्यासं व्याख्यातुमाह।

## तत्र स्थितौ यत्नोऽभ्यासः ॥ १४ ॥

वृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः परिणामः स्थिति-

स्तस्यां यत्न उत्साहः पुनः पुनस्तत्त्वेन चेतसि निवेशन मभ्यास इति उच्यते ॥ १४ ॥ तस्यैव विशेषमाह ।

**स तु दीर्घकालादरनैरन्तर्य्य सत्कारसेवितो दृढ़भूमिः । १५ ।**

बहुकालं नैरन्तर्य्येण आदरातिशयेन च सेव्यमानो दृढ़ भूमिः स्थिरो भवति । दार्ढ्याय प्रभवतीत्यर्थः ॥ १५ ॥ वैराग्यस्य लक्षणमाह ।

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १६ ॥**

द्विविधो हि विषयो दृष्ट आनुश्रविकश्च । दृष्ट इहैवोप लभ्यमानः शब्दादिः । देवलोकादावानुश्रविकः । अनुश्रूयते गुरुमुखादित्यनुश्रवो वेदस्तत् समधिगत आनुश्रविकः । तयोर्द्वयोरपि विषययोः परिणामविरसत्वदर्शनाद्विगत गर्द्धस्य या वशीकार संज्ञा ममैते वश्या नाहमेतेषां वश्य इति योऽयं विमर्षस्तद्वैराग्यमुच्यते ॥ १६ ॥ तस्यैव विशेषमाह ।

**तत्परं पुरुषख्यातेर्गुणवैतृष्णम् ॥ १७ ॥**

तद्वैराग्यं परं प्रकृष्टं प्रथमं वैराग्यं विषयविषयं द्वितीयं गुणविषयं उत्पन्नगुणपुरुषविवेकख्यातेरेव भवति निरोध समाधेरत्यन्तानुकूलत्वात् ॥ १७ ॥ एवं योगस्य स्वरूपमुक्त्वा संप्रज्ञात स्वरूपभेदमाह ।

**वितर्कविचारानन्दास्मितारूपानुगमात् संप्रज्ञातः १८**

समाधिरितिशेषः। सम्यक् संशयविपर्य्ययरहितत्वेन

प्रज्ञायते प्रकर्षेण ज्ञायते भाव्यस्य रूपं येन स संप्रज्ञातः। समाधिर्भावनाविशेषः। स वितर्कादिभेदाच्चतुर्विधः। सवितर्कः सविचारः सानन्दः सास्मितश्च। भावना भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनं। भाव्यञ्च द्विविधं ईश्वरस्तत्त्वानि च। तान्यपि द्विविधानि जड़ाजड़भेदात्। जड़ानि चतुर्विंशतिः अजड़ः पुरुषः। तत्र यदा महाभूतानीन्द्रियाणि स्थूलानि विषयत्वेनादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेखसम्भेदेन भावना क्रियते तदा स वितर्कः समाधिः। अस्मिन्नेव अवलम्बने पूर्वापरानुसन्धानशब्दोल्लेख शून्यत्वेन यदा भावना प्रवर्त्तते तदा निर्वितर्कः। तन्मात्रान्तःकरण लक्षणं सूक्ष्मविषयमालम्ब्य तस्य देशकाल धर्म्मावच्छेदेन यदा भावना तदा सविचारः। तस्मिन्नेव अवलम्बने देशकाल धर्म्मावच्छेदं विना धर्म्मिमात्रावभासित्वेन भावना क्रियमाणा निर्विचार इत्युच्यते। एवं पर्य्यन्तः समाधि ग्राह्यसमापत्तिरिति व्यपदिश्यते। यदा तु रजस्तमोलेशानुविद्धमन्तःकरणसत्त्वं भाव्यते तदा गुणभावाच्चितिशक्तेः सुख प्रकाशमयस्य सत्त्वस्य भाव्यमानस्योद्रेकात् सानन्दः समाधिर्भवति। तस्मिन्नेव समाधौ ये बद्धधृतयस्तत्त्वान्तरं प्रधान पुरुषरूपं न पश्यन्ति ते विगतदेहाहङ्कारत्वाद्विदेहशब्दवाच्याः। इयं ग्रहण समापत्तिः। ततः परं रजस्तमोलेशानभिभूतशुद्धसत्त्वमालम्बनीकृत्य या प्रवर्त्तते भावना तस्यां ग्राह्यस्य सत्त्वस्य न्यग्भावात् चितिशक्तेरुद्रेकात् सत्तामात्रावशेषत्वेन समाधिः सास्मित इत्युच्यते। न चाहङ्कारास्मितयोरभेदः शङ्कनीयः? यतो यत्र

न्तःकरण महमिति उल्लेखेन विषयान् वेदयति सोऽहङ्कारः। यत्रान्तर्मुखतया प्रतिलोमपरिणामे प्रकृतिलीने चेतसि सत्तामात्रं अवभाति सा सास्मिता। अस्मिन्नेव समाधौ ये कृतपरितोषाः परं परमात्मानं पुरुषं न पश्यन्ति तेषां चेतसि स्वकारणे लयमुपागते प्रकृति लया इत्युच्यन्ते। ये परं पुरुषं ज्ञात्वा भावनायां प्रवर्त्तन्ते तेषामियं विवेकख्यातिरूपेह समापत्तिरित्युच्यते। तत्र संप्रज्ञाते समाधौ चतस्रोऽवस्थाः शक्तिरूपतयाऽवतिष्ठन्ते। तत्रैकैकस्यास्त्यागे उत्तरोत्तरा इति चतुरवस्थोऽयं संप्रज्ञातः समाधिः॥ १८॥ असंप्रज्ञातमाह।

## विरामप्रत्ययाभ्यास पूर्वः संस्कारविशेषोऽन्यः॥ १९॥

विरम्यतेऽनेनेति विरामो वितर्कादिचिन्तात्यागः। विरामश्चासौ प्रत्ययश्चेति विरामप्रत्ययस्तस्याभ्यासः पौनः पुन्येन चेतसि निवेशनम्। तत्र या काचित् वृत्तिरुल्लसति तस्या नेति नेतिनैरन्तर्य्येण पर्य्युदसनं विरामप्रत्ययाभ्यासः तत्पूर्व्वः संप्रज्ञातसमाधिः संस्कारविशेषोऽन्यः तद्विलक्षणोऽयमसंप्रज्ञात इत्यर्थः। न तत्र किञ्चिद्वेद्यम्। असंप्रज्ञाता निर्वीजः समाधिः। इह चतुर्विधः चित्तस्य परिणामः व्युत्थानं समाधिप्रारम्भो निरोधः एकाग्रता च। क्षिप्तमूढे चित्तभूमी व्युत्थानं। विक्षिप्ता भूमिः सत्त्वोद्रेकात् समाधि प्रारम्भः निरुद्धैकाग्रते च पर्य्यन्तभूमी प्रति परिणामश्च संस्काराः। तत्र व्युत्थानजनिताः संस्काराः समाधिप्रारम्भजैः संस्कारैः प्रत्याहन्यन्ते। तज्जाश्चैकाग्रताजैः। निरोधजनितैरेकाग्रताजाः ~~निरोधजाः~~ संस्काराः स्वरूपञ्च हन्यन्ते। यथा सुवर्णसंवलितं

भाव्यमानं सोऽस्मात्मानं सुवर्णमलञ्च निर्दहति । एवमेकाग्रताजनितान् संस्कारान् निरोधजाः स्वात्मानञ्च निर्दहन्ति ॥ १८ ॥ तदेवं योगस्य स्वरूपं भेदञ्च संक्षेपेणोपायांश्च अभिधाय विस्तरेणोपायं योगाभ्यासप्रदर्शनपूर्वकमुपक्रमते ।

## भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ २० ॥

विदेहाः प्रकृतिलयाश्च वितर्कादिभूमिकासूत्रे व्याख्याताः तेषां समाधिः भवप्रत्ययः भवः संसारः स एव प्रत्ययः कारणं यस्य स भवप्रत्ययः अयमर्थः आविर्भावान्तर्भूता एव ते संसारे तथाविधसमाधिभाजो भवन्ति तेषां परतत्त्वादर्शनाद् योगाभासोऽयं अतः परतत्त्वज्ञाने तद्भावनायाञ्च मुक्तिकामैन महान् यत्नो विधेय इत्येतदर्थमुपदिष्टम् ॥२०॥ तदन्येषान्तु ।

## श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥२१॥

विदेहप्रकृतिलयव्यतिरिक्तानां श्रद्धादिपूर्वकः श्रद्धादयः पूर्वे उपाया यस्य स श्रद्धादिपूर्वकः । ते च श्रद्धादयः क्रमादुपायोपेयभावेन प्रवर्त्तमानाः संप्रज्ञातसमाधेरुपायतां प्रतिपद्यन्ते । तत्र श्रद्धा योगविषये चेतसः प्रसादः। वीर्य्यमुत्साहः। स्मृतिरनुभूता संप्रमोषः । समाधिरेकाग्रता। प्रज्ञा प्रज्ञातव्य विवेकः। तत्र श्रद्धावतो वीर्य्यं जायते, योगविषये उत्साहवान् भवति। सोत्साहस्य च पाश्चात्यानुभूतिषु स्मृतिरुत्पद्यते। तत् स्मरणाच्च चेतः समाधीयते, समाहितचित्तश्च भाव्यं सम्यग्विवेकेन जानाति । तत्र ते संप्रज्ञातस्य समाधेरुपायाः तस्याभ्यासात् पराच्च वैराग्यात् भवति असंप्रज्ञातः ॥ २१ ॥ उक्तोपायवतां योगिनां उपायभेदाद्भेदानाह ।

## तीव्रसंवेगानामासन्नः ॥ २२ ॥

समाधिलाभः इति शेषः। संवेगः क्रियाहेतुर्दृढ़तरः संस्कारः। स तीव्रो येषामधिमात्रोपायानां तेषां समाधिलाभः समाधिफलञ्चासन्नं भवति शीघ्रमेव सम्पद्यते इत्यर्थः ॥ २२ ॥ के ते तीव्रसंवेगाः ? इत्याह ।

## मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥२३॥

तेभ्य उपायेभ्यो मृद्वादिभेदभिन्नेभ्य उपायवतां विशेषो भवति मृदुमध्य अधिमात्र इत्युपायभेदाः। ते प्रत्येकं मृदु-संवेग मध्यसंवेग तीव्रसंवेगभेदात् त्रिधा। तद्भेदेन च नव-योगिनो भवन्ति मृदूपायो मृदुसंवेगः मध्यसंवेगः तीव्र-संवेगः। मध्योपायः मृदुसंवेगः मध्यसंवेगः तीव्रसंवेगः। अधिमात्रोपायः मृदुसंवेगः मध्यसंवेगः तीव्रसंवेगः। अधि मात्रे उपाये तीव्रे च संवेगे च महान् यत्नः कर्त्तव्य इति भेदोपदेशः ॥ २३ ॥ इदानीमेतदुपायविलक्षणं सुगम-मुपायान्तरं दर्शयितुमाह ।

## ईश्वरप्रणिधानाद्वा ॥ २४ ॥

ईश्वरो वक्ष्यमाणलक्षणः तत्र प्रणिधानं भक्तिविशेषः विशिष्टमुपासनं सर्वक्रियाणां तत्रार्पणं विषयसुखादिकं फलमनिच्छन् सर्व्वाः क्रियास्तस्मिन् परमगुरावर्पयति तत् प्रणिधानं समाधेस्तत् फललाभस्य च प्रकृष्ट उपायः ॥ २४ ॥ ईश्वरस्य प्रणिधात् समाधिलाभ इत्युक्तं तत्रेश्वरस्य स्वरूपं प्रमाणं प्रभावं वाचकं उपासनाक्रमं तत् फलञ्च क्रमेण वक्तुमाह ।

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २५ ॥

क्लिश्नन्तीति क्लेशा अविद्यादयो वक्ष्यमाणाः विहित-प्रसिद्धव्यामिश्ररूपाणि कर्म्माणि । विपच्यन्त इति विपाकाः कर्मफलानि । जात्यायुर्भोगा आफलविपाकाच्चित्तभूमौ शेरत इत्याशयो वासनाख्याःसंस्कारः तैरपरामृष्टः त्रिष्वपि कालेषु न संस्पृष्टः । पुरुषविशेषः अन्येभ्यः पुरुषेभ्यो विशिष्यते इति विशेषः ईश्वर ईशनशील इच्छामात्रेण सकलजगदुद्धरण-क्षमः । यद्यपि सर्वेषामात्मनां क्लेशादिस्पर्शो नास्ति तथापि चित्तगतास्ते तेषामुपदिश्यन्ते । यथा योद्धृगतौ जयपराजयौ स्वामिनः । अस्य तु त्रिष्वपि कालेषु तथाविधोऽपि क्लेशादि-परामर्शो नास्ति अतः सविलक्षण एव भगवानीश्वरः । तस्य च तथाविधमैश्वर्य्यमनादेः सत्त्वोत्कर्षात् तस्य सत्त्वोत्कर्षः प्रकृष्टात् ज्ञानादेः न च अनयोर्ज्ञानैश्वर्य्ययोरितरेतरा-श्रयत्वं ? परस्परानपेक्षत्वात् । ते द्वे ज्ञानैश्वर्य्ये ईश्वरसत्त्वे वर्त्तमाने अनादिभूते तेन तथाविधेन सत्त्वेन तस्यानादि-रेव सम्बन्धः । प्रकृतिपुरुषसंयोगवियोगयोरीश्वरेच्छाव्यति-रेकेणानुपपत्तेः यथेतरेषां प्राणिनां सुखदुःखमोहात्मकतया परिणतं चित्तं निर्मले सात्त्विके धर्मानुप्रवेशे प्रतिसङ्क्रान्तं चिच्छाया संक्रान्तेः संवेद्यं भवति, नैवमीश्वरस्य तस्य केवल एव सात्त्विकः परिणाम उत्कर्षवान् अनादिसम्बन्धेन भोग्यतया व्यवस्थितः अतः । पुरुषान्तरविलक्षणतया स एव ईश्वरः । मुक्तात्मनान्तु पुनःपुनः क्लेशादियोगस्तैस्तैः शास्त्रोक्तै-

-ग्यायेनिंवर्त्तितः अस्य पुनः सर्वदैव तथाविधत्वान्न मुक्ता-त्मतुल्यत्वम्। न चेश्वराणामनेकत्वं, तेषां तुल्यत्वे भिन्नाभि-प्रायत्वात् कार्य्यस्यैवानुपपत्तेः। उत्कर्षापकर्षयुक्तत्वे य एवोत्कृष्टः स एवेश्वरः, अत्रैव काष्ठाप्राप्तत्वादैश्वर्य्यस्य ॥२५॥

एवमीश्वरस्य स्वरूपमभिधाय प्रमाणमाह ।

## तत्र निरतिशयं सार्वज्ञ्यबीजम् ॥ २६ ॥

तस्मिन् भगवति सर्वज्ञत्वस्य यद्बीज अतीतानागतादि-ग्रहस्याल्पत्वं महत्वञ्च मूलत्वाद्बीजमिव बीजं तत् तत्र निर-तिशयं काष्ठां प्राप्तं दृष्ट्वा ह्यल्पत्वमहत्त्वादीनां धर्माणां साति-शयानां काष्ठाप्राप्तिः। यथा परमाणावल्पत्वस्य आकाशे परममहत्त्वस्य एवं ज्ञानादयोऽपि चित्तधर्माः तारतम्येन परिदृश्यमानाः क्वचिन्निरतिशयता मासादयन्ति। यत्र चैते निरतिशयाः स ईश्वरः। यद्यपि सामान्यमात्रेऽनुमानमात्रस्य पर्य्यवसितत्वात् न विशेषावगतिः सम्भवति, तथापि शास्त्रादस्य सर्वज्ञत्वादयो विशेषा अवगन्तव्याः। तस्य स्वप्र-योजनाभावे कथं प्रकृतिपुरुषयोः संयोगवियोगौ आपादय-तीति नाशङ्कनीयं। तस्य कारुणिकत्वात् भूतानुग्रह एव प्रयोजनं कल्पलयमहाप्रलयेषु निःशेषान् संसारिण उद्धरि-ष्यामीति तस्याध्यवसायः यद्यस्येष्टं तत्तस्य प्रयोजनमिति २६ ॥ एवमीश्वरस्य प्रमाणमभिधाय प्रभावमाह ।

## स पूर्वेषामपि गुरुःकालानवच्छेदात् ॥ २७ ॥

आद्यानां स्रष्टॄणां ब्रह्मादीनामपि स गुरुः उपदेष्टा यतः कालेन नावच्छिद्यते अनादित्वात्। तेषां ब्रह्मादीनां

पुराणादिसत्त्वादस्तिकालेनावच्छेदः ॥२७॥ एवं प्रभावमुक्त्वा उपासनोपयोगाय वाचकमाह ।

## तस्य वाचकः प्रणवः ॥ २८ ॥

इत्थमुक्तस्वरूपेश्वरस्य वाचकोऽभिधायकः प्रकर्षेण नूयते स्तूयतेऽनेनेति नौति स्तौतीति वा प्रणवः ओङ्कारस्तयोश्च वाच्यवाचकलक्षणः सम्बन्धो नित्यः सङ्केतेन प्रकाश्यते न तु केनचित् क्रियते यथा पितापुत्रयोः विद्यमान एव सम्बन्धोऽस्यायं पिताऽस्यायं पुत्र इति केनचित् प्रकाश्यते ॥ २८ ॥ उपासनमाह ।

## तज्जपस्तदर्थभावनम् ॥ २९ ॥

तस्य सार्द्धत्रिमात्रिकस्य प्रणवस्य जपो यथावदुच्चारणं तद्वाच्यस्य चेश्वरस्य भावनं पुनः पुनश्चेतसि निवेशनमेकाग्रताया उपायः । अतः समाधिसिद्धये योगिना प्रणवो जप्य-स्तदर्थ ईश्वरश्च भावनीय इत्युक्तं भवति ॥ २९ ॥

उपासनायाः फलमाह ।

## ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥३०॥

तस्माज्जपात्तदर्थभावनाच्च योगिनः प्रत्यक् चेतनाधिगमो भवति विषयप्रातिकूल्येन स्वान्तःकरणाभिमुखमञ्चति या चेतना दृक्शक्तिः सा प्रत्यक्चेतना। तदधिगमो ज्ञानं भवतीत्यर्थः। अन्तराया वक्ष्यमाणास्तेषामभावः शक्तिप्रतिबन्धोऽपि भवति ॥ ३० ॥ अथ के अन्तराया इत्याशङ्कायामाह ।

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्ति-दर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षे-पास्तेऽन्तरायाः ॥ ३१ ॥

नवैते रजस्तमो बलात् प्रवर्त्तमानाश्चित्तस्य विक्षेपा भवन्ति। तैरेकाग्रताविरोधिभिश्चित्तं विक्षिप्यत इत्यर्थः। तत्र व्याधिर्धातुवैषम्यनिमित्तो ज्वरादिः। स्त्यानमकर्मण्यता चित्तस्य। उभयकोट्यालम्बनं ज्ञानं संशयः योग. साध्यो न वेति। प्रमादोऽनवधानता समाधिसाधनेष्वौदासीन्यम्। आलस्यं कायचित्तयोर्गुरुत्वं योगविषये प्रवृत्त्यभावहेतुः। अविरतिश्चित्तस्य विषयसंप्रयोगात्मागर्द्धः। भ्रान्तिदर्शनं शुक्तिकायां रजतवद्विपर्य्ययज्ञानम् अलब्धभूमिकत्वं कुतश्चि न्निमित्तात् समाधिभूमेरलाभः। असंप्राप्तिः। अनवस्थितत्वं लब्धायामपि भूमौ चित्तस्य तत्राप्रतिष्ठा। तत एते समाधे रेकाग्रताया यथा योगं प्रतिपक्षत्वादन्तराया इत्युच्यन्ते ॥ ३१ ॥ चित्तविक्षेपकारकानन्यानप्यन्तरायान् प्रति पादयितुमाह।

दुःखदौर्म्मनस्याङ्गमेजयत्वश्वासप्रश्वासा-विक्षेपसहभुवः ॥ ३२ ॥

कुतश्चिन्निमित्तादुत्पन्नेषु विक्षेपेषु एते दुःखादयः प्रव र्त्तन्ते। तत्र दुःखं चित्तस्य राजसः परिणामो बाधनालक्षणः यद्बाधात् प्राणिनस्तदपघाताय प्रवर्त्तन्ते। दौर्मनस्यं बाह्या भ्यन्तरैः कारणैर्मनसो दौस्थ्यम्। अङ्गमेजयत्वं सर्व्वाङ्गीना

वेपथुरासनमनः स्थैर्य्यस्य बाधकः। प्राणो यद्बाह्यं वायुमाचामति स श्वासः। यत् कौष्ठ्यं वायुं निःश्वसिति स प्रश्वासः। एतैर्विक्षेपैः सह प्रवर्त्तमाना यथोदिताभ्यासवैराग्याभ्यां निरोद्धव्या इत्येषामुपदेशः॥ ३२॥ सोपद्रवविक्षेपप्रतिषेधार्थमुपायान्तरमाह।

## तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः॥ ३३॥

तेषां विक्षेपाणां प्रतिषेधार्थमेकस्मिन् कस्मिंश्चिदभिमते तत्त्वेऽभ्यासश्चेतसः पुनः पुनर्निवेशनं कार्य्यः। यद्बलात् प्रत्युदितायामेकाग्रतायां ते विक्षेपाः प्रणाशमुपयान्ति॥ ३३॥ इदानीं चित्तसंस्कारापादकपरिकर्म्मकथनमुपायान्तरमाह।

## मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्॥ ३४॥

मैत्री सौहार्द्दम्। करुणा कृपा। मुदिता हर्षः। उपेक्षा औदासीन्यम्। एता यथाक्रमं सुखितेषु दुःखितेषु पुण्यवत्सु अपुण्यवत्सु च विभावयेत्। तथाहि सुखितेषु साधुषु एषां सुखित्वमिति मैत्रीं कुर्य्यात् नतु ईर्ष्याम्। दुःखितेषु कथं नु नामैषां दुःखनिवृत्तिः स्यादिति कृपामेव कुर्य्यात् न ताटस्थ्यम्। पुण्यवत्सु पुण्यानुमोदनेन हर्षमेव कुर्य्यात् नतु किमेते पुण्यवन्त इति विद्वेषम्। अपुण्यवत्सु चौदासीन्यमेव भावयेत् नानुमोदनं नवा द्वेषम्। सूत्रे सुखदुःखादिशब्दैस्तद्वन्तः प्रतिपादिताः। तदेवं मैत्र्यादिपरिकर्म्मणा चित्ते प्रसीदति सुखेन समाधेराविर्भावो भवति। परिकर्म चैतत् बाह्यं कर्म्म यथा गणिते मिश्रकादिव्यवहारो गणितनिष्पत्तये सङ्कलितादिकर्म्मोप

कारकत्वेन प्रधानकर्म्मनिष्पत्तये भवति । एवं द्वेषरागादि प्रतिपक्षभूतमैत्र्यादिभावनया समुत्पादितप्रसादं चित्तं संप्रज्ञातादिसमाधियोग्यं सम्पद्यते । रागद्वेषावेव मुख्यतया विक्षेपमुत्पादयतः तौ चेत् समूलमुन्मूलितौ स्यातां तदा प्रसन्नत्वान्मनसो भवत्येकाग्रता ॥ ३४ ॥ उपायान्तरमाह ।

## प्रच्छर्द्दनविधारणाभ्यां वा प्राणस्य ॥ ३५ ॥

प्रच्छर्द्दनं यत् कौष्ठ्यस्य वायोः प्रयत्नविशेषान्मात्रा प्रमाणेन वहिर्निःसारणम् । मात्राप्रमाणेनैव प्राणस्य वायो वंहिर्गतिविच्छेदो विधारणा । स च द्वाभ्यां प्रकाराभ्यां बाह्यस्यान्तरापूरणेन पूरितस्य वा तत्रैव निरोधेन तदेवं रेचकपूरककुम्भकस्त्रिविधः प्राणायामः चित्तस्य स्थितिमेकाग्रतायां निवध्नाति सर्व्वासामिन्द्रियवृत्तीनां प्राणवृत्तिपूर्वकत्वान्मनः प्राणयोश्च स्वव्यापारपरस्परमेकयोगक्षेमत्वात् जीयमाणः प्राणः समस्तेन्द्रियवृत्तिनिरोधद्वारेण चित्तस्यै काग्रतायां प्रभवति । समस्तदोषक्षयकारित्वञ्चास्यागमे श्रूयते दोषकृताश्च सर्व्वा विक्षेपवृत्तयः । अतो दोषनिर्हरणद्वारेणा प्यस्यैकाग्रतायां सामर्थ्यम् ॥ ३५ ॥ इदानीमुपायान्तरप्रदर्शनोपक्षेपेण संप्रज्ञातस्य समाधेः पूर्वाङ्गं कथयति ।

## विषयवती वा प्रवृत्तिरुत्पन्ना स्थितिनिबन्धिनी ।३६।

मनस इति वाक्यशेषः । विषयाः गन्धरसरूपस्पर्शशब्दास्ते विद्यन्ते फलत्वेन यस्याः सा विषयवती प्रवृत्तिर्मनसः स्थैर्य्यं करोति । तथा हि नासाग्रे चित्तं धारयतो दिव्यगन्धसंविदुपजायते । तादृश्येव जिह्वाग्रे रससंवित् ताल्वग्रे रूप

संवित् जिह्वामध्ये स्पर्शसंवित् जिह्वामूले शब्दसंवित् तदेवं तत्तदिन्द्रियद्वारेण तस्मिन् तस्मिन् विषये दिव्ये जायमाना संवित् चित्तस्यैकाग्रताया हेतुर्भवति । अस्ति योगस्य फलमिति योगिनः समाश्वासोत्पादनात् ॥ ३६ ॥ एवंविधमेवोपायान्तरमाह ।

## विशोका वा ज्योतिष्मती ॥ ३७ ॥

प्रवृत्तिरुत्पन्ना चित्तस्य स्थितिनिबन्धिनीति वाक्यशेषः । ज्योतिःशब्देन सात्त्विकः प्रकाशः उच्यते स प्रशस्तो भूयानतिशयवांश्च विद्यते यस्या सा ज्योतिष्मती प्रवृत्तिः। विशोका विगतः सुखमयसत्त्वाभ्यासवशाच्छोको रजः परिणामो यस्या सा विशोका चेतसः स्थितिनिबन्धिनी । अयमर्थः हृत्पद्मसम्पुटमध्ये प्रशान्तकल्लोलक्षीरोदधिप्रख्यं चित्तस्य सत्त्वं भावयतः प्रज्ञालोकात् सर्व्ववृत्तिक्षये चेतसः स्थैर्य्य मुत्पद्यते ॥ ३७ ॥ उपायान्तरप्रदर्शनद्वारेण सम्प्रज्ञातसमाधेर्विषयं दर्शयति ।

## वीतरागविषयं वा चित्तम् ॥ ३८ ॥

मनसः स्थितिनिबन्धनं भवतीति शेषः । वीतरागः परित्यक्तविषयाभिलाषस्तस्य यत् चित्तं परिहृतक्लेशं तत् चालम्बनीकृतं चेतसः स्थितिहेतुर्भवति ॥ ३८ ॥ एवंविधमुपायान्तरमाह ।

## स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३९ ॥

प्रत्यस्तमितबाह्येन्द्रियवृत्तेर्मनोमात्रेणैव यत्र भोक्तृत्वमात्मनः स स्वप्नः । निद्रा पूर्व्वोक्तलक्षणा । तदालम्बनं स्वप्न-

वलम्बनं निद्रालम्बनं वा ज्ञानमालम्ब्यमानं चेतसः स्थितिं करोति ॥ ३८ ॥ नानारुचित्वात् प्राणिनां यस्मिन् कस्मिंश्चिद्वस्तुनि योगिनः श्रद्धा भवति तस्य ध्यानेनापीष्ट सिद्धिरिति प्रतिपादयितुमाह ।

**यथाभिमतध्यानाद्वा ॥ ४० ॥**

यथा अभिप्रेते वस्तुनि बाह्ये चन्द्रादावभ्यन्तरे नाडीचक्रादौ वा भाव्यमाने चेतः स्थिरीभवति ॥ ४० ॥

एवमुपायान् प्रदर्श्य फलदर्शनायाह ।

**परमाणु परममहत्वान्तोऽस्य वशीकारः ॥४१॥**

एभिरुपायैश्चित्तस्य स्थैर्य्यं भावयतो योगिनः सूक्ष्म विषयभावनाद्वारेण परमाण्वन्तो वशीकारः अप्रतिघातरूपो जायते । न क्वचित् परमाण्वन्ते सूक्ष्मे विषये अस्य मनः प्रतिहन्यत इत्यर्थः । एवं स्थूलमाकाशादिपरममहत्त्वपर्य्यन्तं भावयतो न क्वचिच्चेतसः प्रतिघात उत्पद्यते । सर्व्वत्र स्वातन्त्र्यं भवतीत्यर्थः ॥ ४१ ॥ एवमेभिरुपायैश्च संस्कृतस्य चेतसः कीदृग्रूपं भवतीत्याह ।

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥४२॥**

क्षीणा वृत्तयो यस्य स क्षीणवृत्तिः तस्य ग्रहीतृग्रहण ग्राह्येषु आत्मेन्द्रियविषयेषु तत्स्थतदञ्जनता समापत्ति भवति । तत्स्थत्वं तत्रैकाग्रता। तदञ्जनत्वं तन्मयत्वम् क्षीण भूते चित्ते विषयस्य भाव्यमानस्यैवोत्कर्षः । तथाविधा समा-

पत्तिः तद्रूपः परिणामो भवतीत्यर्थः । दृष्टान्तमाह अभिजातस्येव मणेर्यथा अभिजातस्य निर्म्मलस्फटिकमणेस्तत्तदुपाधिवशात्तत्तद्रूपापत्तिः । एवं निर्म्मलस्य चित्तस्य तत्तद्भावनीयवस्तूपरागात्तत्तद्रूपापत्तिः यद्यपि ग्रहीतृग्रहणग्राह्येषु इत्युक्तं तथापि भूमिकाक्रमवशात् ग्राह्यग्रहणग्रहीतृषु इति बोध्यम्। यतः प्रथमं ग्राह्यनिष्ठ एव समाधिः ततो ग्रहणनिष्ठः ततोऽस्मितारूपो ग्रहीतृनिष्ठः केवलस्य पुरुषस्य ग्रहीतुर्भाव्यत्वा सम्भवात् । ततश्च स्थूलसूक्ष्मग्राह्योपरक्तं चित्तं तत्र समापन्नं भवति एवं ग्रहणे ग्रहीतरि च समापन्नं बोद्धव्यम् ॥ ४२ ॥ इदानीमुक्ताया एव समापत्तेश्चातुर्विध्यमाह ।

**शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का ॥४३॥**

श्रोत्रेन्द्रियग्राह्यः स्फोटरूपो वा शब्दः । अर्थो जात्यादिः । ज्ञानं सत्त्वप्रधाना बुद्धिवृत्तिः । विकल्प उक्तलक्षणः तैः सङ्कीर्णा यस्याम् । एते शब्दादयस्त्रयः परस्पराध्यासेन विकल्परूपेण प्रतिभासन्ते गौरिति शब्दो गौरित्यर्थो गौरितिज्ञानं अनेन आकारेण या सा सवितर्का समापत्तिरुच्यते ॥४३॥ उक्तलक्षणविपरीतां निर्वितर्कामाह ।

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४४ ॥**

शब्दार्थस्मृतिप्रविलये सति प्रत्युदितस्पष्टग्राह्याकारप्रतिभासिततया न्यग्भूतज्ञानांशत्वेन स्वरूपशून्येव निर्वितर्का समापत्तिः ॥ ४४ ॥ इदान्तरं प्रतिपादयितुमाह ।

